नया त्यक्तपूर्वापरविचारणम् । यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥ ५७ ॥ भावितं तीव्रसंवेगादात्मना यत्तदेव सः । भवत्याशु कपिश्रेष्ठ विगतेतरवासनः ॥ ५८ ॥ तादृग्रूपो हि पुरुषो वासनाविवशीकृतः । संपश्यति यदैवैतत्सद्वस्त्विति विमुह्यति ॥ ५९ ॥ वासनावेगवैचित्र्यात्स्वरूपं न जहाति तत् । भ्रान्तं पश्यति दुर्दृष्टिः सर्वं मदवशादिव ॥ ६० ॥ वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा । मलिना जन्महेतुः स्याच्छुद्धा जन्मविनाशिनी ॥ ६१ ॥ अज्ञानसुघनाकारा घनाहंकारशालिनी । पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः । पुनर्जन्माङ्कुरं त्यक्त्वा स्थितिः संभृष्टबीजवत् ॥ ६२ ॥ बहुशास्त्रकथाकन्थारोमन्थेन वृथैव किम् । अन्वेष्टव्यं प्रयत्नेन मारुते ज्योतिरान्तरम् ॥ ६३ ॥ दर्शनादर्शने हित्वा स्वयं केवलरूपतः । य आस्ते कपिशार्दूल ब्रह्म स ब्रह्मवित्स्वयम् ॥ ६४ ॥ अधीत्य चतुरो वेदान्सर्वशास्त्राण्यनेकशः ब्रह्मतत्त्वं न जानाति दर्वी[1] पाकरसं यथा ॥ ६५ ॥ स्वदेहाशुचिगन्धेन[2] न विरज्येत यः पुमान् । विरागकारणं तस्य किमन्यदुपदिश्यते ॥ ६६ ॥ अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः । उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ॥ ६७ ॥ बद्धो[3] हि वासनाबद्धो मोक्षः

१ दर्पापहतचेतनः. २ तन्मोहाशुचि. ३ बन्धो हि.

स्याद्वासनाक्षयः। वासनां संपरित्यज्य मोक्षार्थित्वमपि त्यज ॥ ६८ ॥ मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः । मैत्र्यादिवासनानाम्नीर्गृहाणामलवासनाः ॥ ६९ ॥ ता अप्यतः परित्यज्य ताभिर्व्यवहरन्नपि। अन्तःशान्तः[1] समस्नेहो भव चिन्मात्रवासनः ॥ ७० ॥ तामप्यथ परित्यज्य मनोबुद्धिसमन्विताम्। शेषस्थिरसमाधानो मयि त्वं भव मारुते ॥ ७१ ॥ अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनामगोत्रं मम रूपमीदृशं भजस्व नित्यं पवनात्मजार्तिहम् ॥ ७२ ॥ दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम्। अलेपकं सर्वगतं यदद्वयं तदेव चाहं सकलं विमुक्तॐ ॥ ७३ ॥ दृशिस्तु शुद्धोऽहमविक्रियात्मको न मेऽस्ति कश्चिद्विषयः स्वभावतः । पुरस्तिरश्चोर्ध्वमधश्च सर्वतः सुपूर्णभूमाहमितीह भावय ॥ ७४ ॥ अजोऽमरश्चैव तथाजरोऽमृतः स्वयंप्रभः सर्वगतोऽहमव्ययः। न कारणं कार्यमतीत्य निर्मलः सदैव तृप्तोऽहमितीह भावय ॥ ७५ ॥ जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते । विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ ७६ ॥ तदेतदृचाभ्युक्तम् । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्। तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्य-

---

१ शान्तसमस्नेहो.

त्परमं पदम् ॥ ॐसत्यमित्युपनिषत् । ॐपूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ हरिः ॐ तत्सत् ॥

इति शुक्लयजुर्वेदगता मुक्तिकोपनिषत्समाप्ता ।

संपूर्णोऽयमुपनिषत्समुच्चयः ।

ॐतत्सद्ब्रह्मार्पणमस्तु ।

